ॐ नृं ॐ यो वै नृसिंहो देवो भगवान्ये चाष्टौ वसवस्तस्मै वै नमो नमः १७ ॐ सिं ॐ यो वै नृसिंहो देवो भगवान्ये च रुद्रास्तस्मै वै नमो नमः १८ ॐ हं ॐ यो वै नृसिंहो देवो भगवान्ये चाऽऽदित्यास्तस्मै वै नमो नमः १९ ॐ भीं ॐ यो वै नृसिंहो देवो भगवान्ये चाष्टौ ग्रहास्तस्मै वै नमो नमः २० ॐ षं ॐ यो वै नृसिंहो देवो भगवान्यानि पंच महाभूतानि तस्मै वै नमो नमः २१ ॐ णं ॐ यो वै नृसिंहो देवो भगवान्यश्च कालस्तस्मै वै नमो नमः २२ ॐ भं ॐ यो वै नृसिंहो देवो भगवान्यश्च मनुस्तस्मै वै नमो नमः २३ ॐ द्रं ॐ यो वै नृसिंहो देवो भगवान्यश्च मृत्युस्तस्मै वै नमो नमः २४ ॐ मृं ॐ यो वै नृसिंहो देवो भगवान्यश्च यमस्तस्मै वै नमो नमः २५ ॐ त्युं ॐ यो वै नृसिंहो देवो भगवान्यश्चांतकस्तस्मै वै नमो नमः २६ ॐ मृं ॐ यो वै नृसिंहो देवो भगवान्यश्च प्राणस्तस्मै वै नमो नमः २७ ॐ त्युं ॐ यो वै नृसिंहो देवो भगवान्यश्च सूर्यस्तस्मै वै नमो नमः २८ ॐ नं ॐ यो वै नृसिंहो देवो भगवान्यश्च सोमस्तस्मै वै नमो नमः २९ ॐ मां ॐ यो वै नृसिंहो देवो भगवान्यश्च विराट्पुरुषस्तस्मै वै नमो नमः ३० ॐ म्यं ॐ यो वै नृसिंहो देवो भगवान्यश्च जीवस्तस्मै वै नमो नमः ३१ ॐ हं ॐ यो वै नृसिंहो देवो भगवान्यश्च सर्वं तस्मै वै नमो नमः ॥३२॥ इति तान्प्रजापतिरब्रवीदेतैर्द्वात्रिंशन्मंत्रैर्नित्यं देवं स्तुवते ततो देवः प्रीतो भवति स्वात्मानं दर्शयति तस्माद्य एतैर्मंत्रैर्नित्यं देवं स्तौति स देवं पश्यति स सर्वं पश्यति सोऽमृतत्वं च गच्छति य एवं वेदेति महोपनिषत् ॥३॥ : इत्याथर्वणीयनृसिंहपूर्वतापनीयोपनिषदि चतुर्थोपनिषत्समाप्ता ॥

देवा ह वै प्रजापतिमब्रुवन्नित्यादि स होवाच प्रजापतिरित्यंतं स्पष्टार्थम् । अत्र हि सर्वे मंत्राः प्रणवादिकास्तदादिन्यायेन प्रणवं मूलमंत्राक्षरं पुनः प्रणवं सर्वेषु मंत्रेषु दर्शयति । अत्र हि मंत्रेषु यच्छब्दद्वयेनान्यतः सिद्धमनूद्य कुत्रचिच्छब्दसामर्थ्यात्कुत्रचित्तस्मा इत्येकवचनसामर्थ्यादेक एव व्यूहः प्रतीयते । स च द्विविधः क्वचिदसाधारणायुधैस्तत्तद्दे-

वतागम्यः प्रतीयते क्वचिच्च विश्वरूपस्तेनैव न्यायेनोभयत्रापि नृसिंहाकारो योगारूढोऽधस्तनहस्ताभ्यां वरदाभयहस्त उपरितनाभ्यां तत्तद्देवतायुधधारी क्वचिच्छंखचक्रगदाधारी चेत्येतत्सर्वं स्पष्टं करिष्यामः । तथाऽत्रैव नृसिंहाकारव्यूहा ब्रह्मविष्णुमहेश्वरात्मकाः स्रुक्स्रुवशंखचक्रपिनाकत्रिशूलैरायुधैर्गम्यंते नृसिंहात्मकः पुरुषव्यूहो द्विभुजो दश हस्त्या अंगुलयो दश पाद्या यावानेव पुरुष इति श्रुतेः । अत ऊर्ध्वं सर्वे नृसिंहव्यूहाश्चतुर्भुजा नृसिंहात्मकाश्चेश्वरव्यूह ईश्वरायुधगम्यः पूर्वेषां पंचानां यथासंख्यं पंचशक्तिव्यूहः सरस्वतीश्रीगौरीप्रकृतिविद्यात्मिकाः स्त्रियः स्वायुधैर्गम्या एवं मूलमंत्राक्षरेषु दशस्वैशानीं दिशमारभ्य प्रणवसंपुटितेषु सर्वाभरणयुक्ताः श्वेतरूपा उपास्याः। एवं वक्ष्यमाणाः सर्वे व्यूहा यथासंख्यं मूलमंत्राक्षरेषूपास्याः । प्रणवव्यूह एकेन प्रणवाक्षरेण वक्षसि चिह्नतः प्रणवचतुष्टयमात्रो वासुदेवविग्रहः सशाखवेदविग्रहः पंचाग्निविग्रहः सप्तव्याहृतिविग्रहोऽष्टलोकपालविग्रहो वसुरुद्रादित्याष्टग्रहपंचमहाभूतविग्रहा एकैकस्मिन्नृसिंहव्यूहे यथासंख्यमंतर्भूता उपास्या इति दश व्यूहा विश्वरूपा उपास्याः । कालमनुमृत्युयमांतकप्राणसूर्यसोमविराट्पुरुषजीवरूपचेतनाचेतनसर्वात्मका इत्येते व्यूहा अविश्वरूपास्तत्तदसाधारणरूपगम्या एवमेकैकव्यूह उपास्यस्तेन तेन मंत्रेण स्तुत्यः। ततो देवः स्वात्मानं स्वकीयं रूपं विश्वरूपमविश्वरूपं च यथायोग्यं दर्शयति । यस्मादेवं तस्माद्य उपासक एतैर्मंत्रैर्नित्यं नियमेन स्तौति, स देवं विश्वरूपमविश्वरूपं च पश्यति साक्षात्करोति । सोऽमृतत्वमित्यादि महोपनिषदित्यंतं स्पष्टार्थम् । तत्रामृतत्वं च गच्छतीति फलस्य द्विरभ्यासः स्तुतिमात्रादेव परमफलावाप्तिं मंत्राणां च सामर्थ्यं दर्शयति । महोपनिषच्छब्दः प्रणवबाहुल्यमिति सर्वं निर्मलम् ॥३॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकरभगवत आद्यकृतावाथर्वणनृसिंहपूर्वतापनीयोपनिषद्भाष्ये चतुर्थोपनिषद्भाष्यं संपूर्णम् ॥

---

# पंचमोपनिषत्।



एवं तावचतुर्थोपनिषद्यंते स्तुत्युपनिषदा महाचक्रस्थद्वात्रिंशत्पत्रेषु यथासंख्यं द्वात्रिंशन्नृसिंहस्तुत्योपास्यानभिधायाथेदानीं महाचक्रविद्यामभिधातुं महाचक्रस्वरूपं निरूपयितुं प्रश्नोत्तररूपाख्यायिकया पंचमोपनिषदारभ्यते— देवा ह वै प्रजापतिमब्रुवन्निति। नन्वेवं वर्हि स्तुत्युपनिषद्विद्यातो महाचक्रविद्यया प्राग्भवितव्यम्। अत्रोच्यते। सत्यम्। यदीयं प्राक्स्यात्पुरश्चरणार्थं पंचमांगन्यासार्थं च कृत्स्नैव प्रतीयेत, नतु द्वात्रिंशद्व्यूहोपासना मात्रं पुरश्चरणार्थमितरत्सुदर्शनादिमहाचक्रं सद्द्वात्रिंशद्व्यूहकं पंचमांगमित्येवं विभागः प्रतीयेतातस्तद्विभागज्ञापनार्थं न प्रागभिहितेयमिति। नन्वेवमपि तदादिन्यायेन महाचक्रविद्या पुरश्चरणार्थं कृत्स्नैव कस्मान्न गृह्येत। तन्न। तत्र तदादिन्यायवैषम्यात्। नहि महाचक्रस्यायमादिर्द्वात्रिंशद्व्यूहो नामा, अपि तु महाचक्रनाभिवर्तिक्षीरोदार्णवसंबंधिनृसिंहव्यूहः। तस्मात्सूक्तमुपनिषद्विद्यातः प्रागभिधानमस्या इति।

देवा ह वै प्रजापतिमब्रुवन्महाचक्रं नाम चक्रं नो ब्रूहि भगव इति सार्वकामिकं मोक्षद्वारं यद्योगिन उपदिशंति स होवाच प्रजापतिः षडरं वा एतत्सुदर्शनं महाचक्रं तस्मात्षडरं भवति षट्पत्रं चक्रं भवति षड्वा ऋतव ऋतुभिः संमितं भवति मध्ये नाभिर्भवति नाभ्यां वा एतेऽराः प्रतिष्ठिताः। मायया वा एतत्सर्वं वेष्टितं भवति नाऽऽत्मानं माया स्पृशति तस्मान्मायया वहिर्वेष्टितं भवति। अथाष्टारमष्टपत्रं चक्रं भवत्यष्टाक्षरा वै गायत्री गायत्र्या संमितं भवति वहिर्मायया वेष्टितं भवति क्षेत्रं क्षेत्रं वा मायैषा संपद्यते। अथ द्वादशारं द्वादशपत्रं चक्रं भवति द्वादशाक्षरा वै जगती जगत्या संमितं भवति वहिर्मायया वेष्टितं भवति। अथ षोडशारं षोडशपत्रं चक्रं भवति षोडशकलो वै पुरुषः पुरुष एवेदं सर्वं पुरुषेण संमितं भवति मायया वहिर्वेष्टितं भवति। अथ द्वात्रिंशदरं द्वात्रिंशत्पत्रं चक्रं भवति द्वात्रिंशदक्षरा वा अनुष्टुबनुष्टुभा संमितं भवति बहिर्मायया वेष्टितं भवत्यरैर्वा एतत्सुवद्धं भवति वेदा वा एतेऽराः पत्रैर्वा एतत्स-

वेंतः परिक्रामति च्छंदांसि वै पत्राणि ॥१॥

देवाः प्राक्स्तुतिश्रवणेनात्यंतहर्षिताः प्रजापतिमब्रुवन्महाचक्रं नामैतन्नामधेययुक्तं चक्रम् । यद्वैतन्नामधेययुक्तमेव चक्रं वर्तुलमुत्तराधरभावेन स्थितं सच्चतुष्टयांगव्यापकमस्त्राख्यमंगं नोऽस्मभ्यं ब्रूहि । भगवो भगवन्निति संबोधनम् । सार्वकामिकं सर्वकामसाधनत्वात्सार्वकामिकम् । अथवा सर्वेषां देवानां ब्रह्मादीनां व्यूहाः स्वात्मतयैव स्वभावतयैव कामिता यस्मिंश्चक्रे नाभिवर्त्याद्यव्यूहेन तत्सार्वकामिकम् । अत एव मोक्षद्वारं प्रणववहुलत्वान्मूलमंत्राक्षरसंख्यातः प्रणवसंपुटीकरणात्प्रणवाक्षरसंख्या द्विगुणा चतुःषष्टिः । अस्यां च विद्यायां मोक्षः प्रणवद्वारक एव । 'देहांते देवः परं ब्रह्म तारकं व्याचष्टे' इति श्रुतेः । ततश्चायमर्थः । मोक्षस्य प्रणवाख्यं द्वारं यस्मिंस्तत्तथोक्तम् । यच्चक्रं योगिन उपदिशंत्युपासकेभ्यः । स होवाच प्रजापतिरित्युक्तार्थम् । षडरं वा एतत्सुदर्शनं महाचक्रं महाचक्रस्यैव नामांतरं सुदर्शनमंत्रयोगात्सुदर्शनम् । यद्वा सुष्ठु दर्शनं विद्यते यस्मिंस्तथोक्तम् । एतत्पत्राधोभागे नालरूपोऽरशब्दवाच्यः । षडरा विद्यंते यस्मिंस्तत्षडरं, यस्मादेवं तस्मात्षडरं भवति षट्पत्रं चक्रं भवति । अरादुपरिभागः कोणत्रययुक्तः पत्राकृतिः पत्रं, षट्पत्राणि विद्यंते यस्मिंस्तत्तथोक्तम् । एतदेव स्तौति । षड्वा ऋतव ऋतुभिः संमितं भवति । एतस्मादर्थवादादराः पत्राणि च ऋतुबुद्ध्योपास्यानि भवन्ति । अराणां प्रतिष्ठार्थं स्थानमाह । मध्ये चक्रस्य मध्ये नाभिर्वर्तुलाकारा भवति । नाभ्यां वै एतेऽराः प्रतिष्ठिताः प्रागुक्तास्तदादिन्यायेन पत्राणि च । मायया प्रागुक्तेन मूलमंत्रशक्त्यक्षरेणैतत्षडरं षट्पत्रं सर्वं वेष्टितं भवति । यस्मान्नात्मानं चक्रस्य स्वरूपमरपत्रात्मकं माया स्पृशति तस्मान्मायया बहिर्वेष्टितं भवति । यद्वा प्रत्यक्चैतन्यमेव केवलं शुद्धं चक्रबुद्ध्योपास्यं यस्मात्तस्मादात्मानं प्रत्यक्चैतन्यं न माया स्पृशति मायाविनमिव । तस्मान्मायया बहिर्वेष्टितं भवति । अष्टारमष्टपत्रं चक्रं द्वादशारं द्वादशपत्रं चक्रं षोडशारं षोडशपत्रं चक्रं द्वात्रिंशदरं द्वात्रिंशत्पत्रं चक्रमिति चतुष्टयं षडरं षट्पत्रचक्रेण व्याख्यातम् । तत्रायं विशेषः— आद्यपत्रेऽराः पत्राणि चर्तुबुद्ध्योपास्यानि । द्वितीयतृती-

यपंचमेष्वरा वेदबुद्ध्योपास्याः पत्राणि गायत्रीजगत्यनुष्टुब्बुद्ध्या यथासंख्यं उपास्यानि । वेदा एवाराश्छंदांसि वै पत्राणीत्यर्थवादात् । चतुर्थे पत्रे षोडशाराः षोडशपत्राणि च षोडशकलाबुद्ध्योपास्यानि । क्षेत्रं क्षेत्रं वा मायैषा संपद्यते । पुरुष एवेदं सर्वं पुरुषेण संमितं भवतीति प्रत्यक्चैतन्यं शुद्धमाह माययाऽसंस्पृष्टं बहिःशब्दात् । तादृशं चक्रं तस्मिन्प्रकल्प्य तदुपास्यमित्यर्थः । तथाचारपत्रशब्दाद्बहिःशब्दाच्च सबिंदुकेन शक्त्यक्षरेण यद्वेष्टनं तद्यथासंख्यं पूर्वपूर्वचक्रापरपत्रासंस्पृष्टमुत्तरोत्तरचक्राणामाश्रयत्वेन नाभिरूपमित्येवं सुदर्शनचक्रपत्रासंस्पृष्टं यद्वेष्टनं मायया तदुपरितनाक्षरनारायणचक्राश्रयत्वेन नाभिरूपमेवमष्टाक्षरवेष्टनं द्वादशाक्षरस्य नाभिरूपं द्वादशाक्षरवेष्टनं सबिंदुकमातृकाषोडशाक्षरस्य नाभिरूपं सबिंदुकाद्यमातृकाषोडशाक्षरवेष्टनं द्वात्रिंशदक्षरस्य नाभिस्ततो द्वात्रिंशदक्षरवेष्टनमसंस्पृष्टमनाभिरूपमेव इत्येवं सुदर्शननारायणवासुदेवषोडशारद्वात्रिंशदरचक्राणां यथासंख्यं पंच नाभयो नाभीनामेवापेक्षया वेष्टनरूपतेत्याद्यो नाभिर्मायाक्षररहित उपरितना नाभयोऽत्यं च वेष्टनं मायाक्षरेणेति तत्त्वार्थः । नन्वेवं तर्ह्यथशब्दस्य तत्र तत्र प्रयोगात्पूर्वचक्रसंस्पर्शात्पंचनाभिकानि पंच चक्राणि पृथक्प्रयोज्यानि कस्मान्न परिगृह्यंते । तथाचैकचक्रत्वेऽप्यमायिनो भूतनाभिकल्पनायां वेष्टनव्यतिरिक्तपंचनाभिकल्पना कस्मान्न भवति ? अत्रोच्यते—'महाचक्रं नाम चक्रं नो ब्रूहि' इत्युपक्रम्य 'तद्वा एतन्महाचक्रं' इत्युपसंहारान्महाचक्रैकतावगमाच्च चक्रचतुष्टयं तदंतर्गतमेवेत्यवगम्यते । तत्र तत्राथशब्दप्रयोगस्तत्तचक्रोद्धारे मांगलिकत्वप्रदर्शनार्थः । तथा वेष्टनानां नाभिकल्पनायां प्रतिषेधाभावाद्योग्यत्वाच्च कल्पनालाघवाच्च न पृथगुभे कल्पने इति । यत्र क्वचिद्बहिःशब्दपूर्वको मायाशब्दः पठ्यते क्वचिद्विपरीतस्तत्रायमभिप्रायः— यत्र मायाशब्दाद्बहिःशब्दः पूर्वस्तत्र मायाविशेषणं बहिर्भूतया मायया बहिर्मायया । यत्र च मायाशब्दात्परो वेष्टनशब्दात्पूर्वो बहिःशब्दस्तत्राविशिष्टया मायया तत्र बहिःशब्दो न मायाविशेषणं, किंतु वेष्टनविशेषणम् । माया हि द्विविधा नारसिंहमूलमंत्रगता सबिंदुकेकाररूपा निरुपपदान्मायाशब्दात्प्रतीयतेऽन्या तु रेफहकाराभ्यां मिलितसबिंदुकेकाररूपा सोपपदान्मायाशब्दात्प्रतीयते । ततश्च मूलमंत्राद्बहिर्भूतमायया ह्रीमित्येवं-

रूपया वेष्टितं भवतीति तत्त्वार्थः । ततः सुदर्शनचक्रे मूलमंत्रगतमायया वेष्टनं षोडशचक्रेऽप्येवमेव बहिःशब्दस्य वेष्टनात्पूर्वमुपादानाद्वेष्टनविशेषणं बहिःशब्दो मध्यवेष्टनव्यावृत्त्यर्थः । नारायणवासुदेवनारसिंहचक्रेषु व्याख्यातबहिर्मायया वेष्टनमिति वेष्टनचक्रोद्धारविवेकः ॥१॥

एवं महाचक्रस्य संवेष्टनमुद्धारं चाभिधायाथेदानीमुद्धृतचक्रे यथाविहितमंत्रान्न्यसितुं तन्नाभ्यामक्षरन्यासमाह—

**तदेव चक्रं सुदर्शनं महाचक्रं तस्य मध्ये नाभ्यां तारकं भवति यदक्षरं नारसिंहमेकाक्षरं तद्भवति षट्सु पत्रेषु षडक्षरं सुदर्शनं भवत्यष्टसु पत्रेष्वष्टाक्षरं नारायणं भवति द्वादशसु पत्रेषु द्वादशाक्षरं वासुदेवं भवति षोडशसु पत्रेषु मातृकाद्याः सबिंदुकाः षोडश कला भवंति द्वात्रिंशत्सु पत्रेषु द्वात्रिंशदक्षरं मंत्रराजं नारसिंहमानुष्टुभं भवति तद्वा एतत्सुदर्शनं महाचक्रं सार्वकामिकं मोक्षद्वारमृङ्मयं यजुर्मयं साममयं ब्रह्ममयममृतमयं भवति तस्य पुरस्ताद्वसव आसते रुद्रा दक्षिणत आदित्याः पश्चाद्विश्वे देवा उत्तरतो ब्रह्मविष्णुमहेश्वरा नाभ्यां सूर्याचंद्रमसौ पार्श्वयोस्तदेतदृचाभ्युक्तम्— ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुः । यस्तं न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत इति । तदेतन्महाचक्रं बालो वा युवा वा वेद स महान्भवति स गुरुर्भवति स सर्वेषां मंत्राणामुपदेष्टा भवत्यनुष्टुभा होमं कुर्यादनुष्टुभाऽर्चनं तदेतद्रक्षोघ्नं मृत्युतारकं गुरुतो लब्धं कंठे बाहौ शिखायां वा बध्नीत सप्तद्वीपवती भूमिर्दक्षिणार्थं नावकल्पते तस्माच्छ्रद्धया यां कांचिद्दद्यात्सा दक्षिणा भवति ॥२**

तदेव चक्रं सुदर्शनं महाचक्रमिति । तच्छब्देन द्वात्रिंशदरं द्वात्रिंशत्पत्रं चक्रमेवशब्देन तदेवावधृत्य तदेव चक्रं तदादिन्यायेन सुदर्शनादिशब्दैरूर्ध्वं चक्रचतुष्टयमपि महाचक्रात्मकमिति दर्शयति । महाचक्रमिति समाधानाधिकरण्याच्च । तस्य मध्ये महाचक्रस्य मध्ये मध्यवर्तिनाभ्यां वेष्टनरूपा हि नाभयो भूमध्यास्ता व्यावर्तयितुं मध्ये नाभ्यामित्युक्तम् । तारकं भवति संसारतारकत्वात्तारकं प्रणवाक्षरं भवति । यदक्षरं नारसिंहमेकाक्षरं तद्भवतीत्यक्षरम् । जग-

द्धितं वा एतद्रूपमक्षरामिति नृसिंहपदं व्याख्यातं तदक्षरशब्दात्प्रत्यभिज्ञायते। तथा नारसिंहमिति तद्धितात्सामप्रभृत्युपास्यं सर्वं प्रतीयते। ततः सर्वस्मिन्नुपास्ये प्रतीत एकमेवोपास्यं मूलनृसिंहव्यूहाख्यं वक्तुं विशिनष्टि—एकाक्षरं तद्भवतीति। यदक्षरं नारसिंहमुपास्यमित्यनूद्य तदेकं भवतीत्यक्षरं चेति महाचक्रमध्यनाभिवर्तित्वेन क्षीरोदार्णवसंबंधितयोपासनं विधीयत इत्यर्थः। तत्र केचिन्नारसिंहमेकाक्षरमिति विशेषणोपादानादेकाक्षरनृसिंहमिश्रितप्रणवो नाभ्यां न्यसनीय इत्याचक्षते, तदपि सांप्रदायिकत्वान्न विरुद्धम्। तस्मिन्नपि पक्षे नारसिंहामिति तद्धितादेकाक्षरो नृसिंहमंत्रः प्रणवमिश्रितो द्वात्रिंशन्नृसिंहव्यूहं विहाय यावत्प्राकरणिकं मूलनृसिंहव्यूहगतं उपास्यं प्रतीयत एव। ततश्चैतद्विद्यांगमेकाक्षरो नृसिंहमंत्रो यथोक्तोपास्याभिधायकत्वात्तस्य केवलः प्रणवेन विकल्प एकाक्षरनृसिंहमंत्रस्य प्रणवस्तु नियत एवेति तत्त्वार्थः। अत ऊर्ध्वं तत्तन्मंत्रन्यासे तत्तच्चक्रेषु पत्रग्रहणमरतदंतरालपत्रांतरालव्यावृत्त्यर्थं द्रष्टव्यम्। षट्सु पत्रेषु सुदर्शनं भवति। ऐशानपत्रमारभ्य षडक्षरः सुदर्शनो मंत्रो न्यसनीय इत्यर्थः। एवमुत्तरेषु पत्रेषु योज्यम्। अष्टसु पत्रेष्वष्टाक्षरं नारायणं भवति। प्रणवभावांतर्भावेनाष्टाक्षरतेति केचित्। तद्वदेव द्वादशपत्रेषु द्वादशाक्षरं वासुदेवं भवतीति। अत्रापि द्वादशाक्षरता पूर्ववत्। षोडशपत्रेषु मातृकामंत्रवर्णस्याद्या वर्णमातृकाद्याः सबिंदुका बिंदुसहिताः षोडश स्वरा भवंति। द्वात्रिंशत्सु पत्रेषु द्वात्रिंशदक्षरं सामाभिव्यक्तं मंत्रराजमानुष्टुभं भवति। मूलमंत्रस्यैवैकैकमक्षरम्। यत्त्वेकैकमक्षरमेकैकस्मिन्पत्रे तत्प्रणवसंपुटितं कार्यं 'प्रत्यक्षरमुभयत ओंकारो भवति' इति श्रुतेः। तदस्त्राख्यमंगं महाचक्रमुपासितं तन्निक्षिप्तमनिष्टे वस्तुनि त्रासकारित्वात्तदस्त्रं पंचममंगम्। अत एवास्त्रांगमंत्रं व्याचक्षाणैरस्माभिरुक्तं प्रपंचसारे—

"असुत्रासादिकौ धातू स्तः क्षेपच्चलनार्थकौ।
ताभ्यामनिष्टमाक्षिप्य क्षिप्यते फट्खडमिना" इति।

सार्वकामिकं मोक्षद्वारमित्युक्तार्थम्। ऋङ्मयं यजुर्मयं साममयं ब्रह्ममयममृतमयं भवतीति पंच मयट्प्रत्ययाः प्राचुर्यार्था ग्राह्याः। ऋंग्यजुःसामाथर्वप्रचुरम्। ब्रह्ममयमिति ब्रह्मशब्देनाथर्ववेदः सोऽयं ब्रह्म वेद

इत्येतद्ब्राह्मणाभिधानात् । वेदप्रचुरताऽराणां वेदबुद्धचोपास्यत्वात् । विकारार्थो वा मयड्वेदविकारात्मका इत्यर्थः । अमृतमयं क्षीरप्रचुरनाभिकं क्षीरविकारनाभिकं वेति । तस्येति तच्छन्दान्नाभिस्थो विष्णुर्मूलनृसिंहव्यूहः परामृश्यते । तत्परिचारकान्देवानाह—पुरस्ताद्वसवः परिचारका आसते रुद्रा दक्षिणत आदित्याः पश्चाद्विश्वे देवा उत्तरतो ब्रह्मविष्णुमहेश्वरा नाभ्यामिति । एवं दिङ्नाभिपरिचारकानुक्त्वाऽथेदानीं पार्श्वपरिचारकानाह— सूर्याचंद्रमसौ पार्श्वयोः कुक्षिप्रदेशयोरिति यावत् । तदेतन्महाचक्रमृचाऽभ्युक्तम् । यस्मिन्महाचक्रे अक्षरे । अशू व्याप्तावित्यस्य रूपं सरो मत्वर्थे । तस्मिन्व्याप्तिमति । परम उत्कृष्टे व्योमवत्सर्वव्यापकत्वेन स्थिते । अधीत्युपरिभावे । ऋच इत्यृग्ग्रहणं उपलक्षणार्थम् । ऋचो वेदा निषेदुः यस्मिन्वक्रे विश्वे सर्वे देवाः नृसिंहरूपेण निषेदुः स्थिताः । यदि वर्च इति षष्ठी । अनुष्टुप्संबंधिन्यक्षरे व्याप्तिमति चक्रे सर्वे वेदाः स्थितास्तत्सुदर्शनमंत्रादिसंबंधि चक्रमित्यर्थः । य उपासकस्तन्महाचक्रं न वेद नोपास्ते किमृचग्वेदादिना यदि वर्चाऽनुष्टुप्छंदस्कयर्चेति । अनेनैतद्दर्शयति— महाचक्रोपासनगर्भितमेवानुष्टुबुपासनं कुर्यान्न तु तद्रहितमिति । य इत्तद्विदुस्त इमे समासत इत्युक्तार्थम् । इतिशब्द ऋक्समाप्तिं द्योतयति । तदेतन्महाचक्रं बालो वा युवा वा वेदोपास्ते तस्येदं फलं स महान्भवति । महतीं प्रतिष्ठां जने प्राप्नोति । यदि वा महान्महाविष्णुरिति । स गुरुः सर्वैर्देववदाराध्यः । स सर्वेषां मंत्राणामुपदेष्टा भवत्युपदेशकः । सामाभिव्यक्तानुष्टुभा होमं कुर्यादिति विद्यांगोऽयं होमस्तस्मिन्द्रव्यानुपादानात्प्रतिदिनं हविष्यमन्नं साज्यं जुहुयादिति । तथा संख्यानुपादानात्सकृत् द्वादशवारं वा । यदि वा सूत्रागतदशपदानां मूलनृसिंहव्यूहे द्वात्रिंशद्व्यूहे च व्याख्यातत्वादुभयोद्देशेन होमं कुर्यात् । ततश्च क्षीरोदार्णवशायिने नृसिंहाय त्रिनेत्राय पिनाकहस्तायोग्रायेदमिति हुत्वा ब्रह्मादिद्वात्रिंशद्व्यूहात्मकाय नृसिंहायोग्रायेति जुहुयादित्येवं प्रातिपदं मूलमंत्रावृत्तिः । यद्वाऽनुष्टुंभेत्येकवचनात्सकृन्मूलमंत्रमुच्चार्य स्वाहाकारांतं जुहुयात्प्रतिपदमुद्दिश्य त्यागः कार्यः । तथा सामाभिव्यक्तानुष्टुभाऽर्चनं षोडशोपचारादि कुर्या-

दित्यनुषंगः । अत्रापि होममंत्रवन्मंत्रावृत्त्यनावृत्ती एष्टव्ये । तदेतन्महाचक्रं रक्षोघ्नं मृत्युतारकं गुरुप्रसादाल्लब्धं कंठे बाहौ शिखायां वा बध्नीत यस्तस्मै गुरवे यस्मात्सप्तद्वीपवती द्विगुणावृत्ताऽपि पृथ्वी दक्षिणार्थे नावकल्पते, तस्माच्छ्रद्धया भक्त्या यां कांचिद्भूमिं यथाशक्त्यनुरूपां दद्यात्सा दाक्षिणा भवति । एवं प्रागुक्तं श्रुतित उपासनमवगतं पंचांगन्यास उपसंहृतमेकस्मान्मतात् । अथ मतांतरपर्यालोचनया महाचक्र एवोपसंहृतं तस्मात्प्रत्यक्षरमुभयत ओंकारो भवतीत्यत्र मूलमंत्राक्षराणां प्रणव उपसंहृतत्वात्प्रणवप्रधानमेवेदं महाचक्रं तस्मिञ्शक्तिबाहुल्यश्रवणान्मायया बहिर्वेष्टितं भवति । बहिर्मायया वेष्टितं भवतीत्यसकृच्छ्रवणादुद्धृतपदव्याख्यानावसरे प्रतिपदं यस्मात्स्वमहिम्ना सर्वाँल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतानीत्यसकृन्महिमशब्दवाच्याया मायायाः सर्वलोकसर्वदेवात्मभूतानां साधनत्वेन श्रवणात्तद्वेष्टितमायाधारत्वेन यथासंख्यं पृथिव्यादिलोकर्ग्वेदादिवेदाग्न्यादिदेवभूतानामात्मनां च साधनत्वश्रवणान्महाचक्रांतर्गतवेष्टितमायाधारमेवेदमुपासनम् । न तु मूलनृसिंहगतं पंचांगन्यासार्थं चांतरंगत्वान्महाचक्रमेवेदमुपासनम् । तदपि संप्रदायागतमुपादेयमित्युपासनाविकल्पः । तत्रापि बहुतरं संप्रदायानुकूल्यागतत्वादन्यमेवोपासनमुपादेयमिति केचित् । तस्मिन्मते प्रणवसावित्रयजुर्लक्ष्मीनृसिंहगायत्रीति मंत्रचतुष्टयमंगं सामाभिव्यक्तं यथायोग्यतया महाचक्रप्रकाशकत्वेन योज्यं तथैवोपास्यं महाचक्रमिति रहस्यं तत्त्वं चेति ॥२॥

**देवा ह वै प्रजापतिमब्रुवन्नानुष्टुभस्य मंत्रराजस्य फलं नो ब्रूहि भगव इति स होवाच प्रजापतिर्य एतं मंत्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आदित्यपूतो भवति स सोमपूतो भवति स सत्यपूतो भवति स ब्रह्मपूतो भवति स विष्णुपूतो भवति स रुद्रपूतो भवति स वेदपूतो भवति स सर्वपूतो भवति स सर्वपूतो भवति ॥ इति प्रथमोऽध्यायः ॥१॥**

एवं नृसिंहब्रह्मविद्यां सकलमतानुसारिणीं कृत्स्नामभिधायाथेदानीं तदनुष्ठातुः कैमुत्यन्यायेन फलकथनाय प्रश्नोत्तररूपाख्यायिकामवतारयति—देवा ह वै प्रजापतिमब्रुवन्नित्यादिना । अत्र देवा ह वा इत्याद्यारभ्य

तदेतन्निष्कामस्य भवतीत्यंता अष्टावध्यायाः, प्रत्यध्यायसमाप्तौ च द्विरभ्यासः। देवा ह वै प्रजापतिमब्रुवन्नस्य मंत्रस्य प्रागुक्तोपासनाविशिष्टस्य फलं नो ब्रूहि भगव इति । स होवाच प्रजापतिरित्युक्तार्थम् । यो द्विविधोपासक एतमित्येतच्छब्दपरामृष्टं प्रागुक्तविद्यागर्भितं मंत्रराजं सामराजं नारसिंहं नृसिंहाकारब्रह्मोपासनागर्भमानुष्टुभमनुष्टुप्छंदस्कं नित्यमिति साकारब्रह्म-प्रतिपत्तिद्वारेण नित्यभूतनिराकारब्रह्मप्रतिपादकत्वान्नित्यमधीत उच्चारयति । यत्रेदृशसामोच्चारणमात्रादेव वक्ष्यमाणफलाप्तिः, किं तत्र विद्यानुष्ठानादि-त्यभिप्रायेण तत्र तत्राधीतेऽधीत इत्यवोचत् । अथवा नित्यमधीत इति नियमेनाधीते । अथवा नित्यमधीत्युपरिभाव इते जानीते । सर्वे गत्यर्था ज्ञानार्थाः । नित्यं संध्योपासनादि निर्वर्त्योक्तकालं यो विद्यामेतामनुति-ष्ठतीत्यर्थः । अथवा नित्यमानुष्टुभमित्यन्वयादानुष्टुभस्य साम्नो नित्यत्वं दर्शयति न त्वितरस्य सामरूपस्येति । अथवा नित्यं संध्योपासनादि कर्माधिकृत्येते जानीते । एतदुक्तं भवति । ततो नित्यसंध्योपासनाग्नि-होत्राद्युपास्यदेवता नारसिंहलीलाविग्रहेत्युपास्ते । एतद्विद्यागर्भितेत्यर्थः । अथवा य उपासकः प्रागुक्तविद्यानुष्ठानप्रकारज्ञानेऽसमर्थः स केवलं विद्या-प्रतिपादकं ग्रंथं नित्यं प्रतिदिनं स्वाध्यायधर्मेणाधीते पठति जपति, सोऽपि वक्ष्यमाणं फलं प्राप्नोति । तस्य तज्जपसामर्थ्यात्परमेश्वरः कारुण्यात्तद्वि-द्यानुष्ठानप्रकारं साकारप्रभृति निराकारपर्यंतमिहैव कथयति । तथाचांते श्रूयते—'तद्वा एतत्परमं धामैतद्विद्यागर्भितमंत्रराजाध्यायकस्य पाठकस्य जापकस्य इत्यादिना । स उपासकोऽग्निवाय्वादित्यसोमसत्यब्रह्मविष्णुरुद्रवे-दैर्नृसिंहरूपैरुपास्यैः पूतो भवति पवित्रो भवति । अन्यैश्च सर्वैर्नृसिंहरू-पैरुपास्यैः पूतो भवति । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति ॥

इति प्रथमोऽध्यायः ॥१॥

---

य एतं मंत्रराजं नारसिंहमानुष्टुभं नित्यमधीते स मृत्युं तरति स पाप्मानं तरति स ब्रह्महत्यां तरति स भ्रूणहत्यां तरति स वीरहत्यां तरति स सर्वं तरति स सर्वं तरति ॥ इति द्वितीयोऽ-ध्यायः ॥२॥

इतःप्रभृति नित्यमेतद्विद्यानुष्ठाने तत्प्रतिपादकग्रंथजपे वा आनुषंगिकाण्येव फलानि काम्यानि तद्रहितानि वा कथयितुमाह । य उपासको नित्यत्वेन तद्विद्यानुष्ठानेन तज्जपेन वा पापक्षयं कामयते । एतं मंत्रराजं नारसिंहमानुष्टुभं नित्यमधीत इत्युक्तार्थम् । तथेतः प्रभृत्यांऽत्यादध्यायात्तत्र तत्र यच्छब्देन पुंलिंगेन प्रागुक्तनृसिंहविद्याया निश्चिततया अनुष्ठानात्तद्विद्याप्रतिपादकग्रंथजप्ता वाऽध्येता वा परामृश्यते । तथा तच्छब्देन पुंलिंगेन स एव परामृश्यते । तथा तत्र तत्र पुंलिंगात्तच्छब्दाभ्यासात्तस्मिन्नेव नित्यानुष्ठाने जपे वा व्यस्तं समस्तं वा यथायोग्यतया फलं गम्यते । स मृत्युं पाप्मानं ब्रह्महत्यां भ्रूणहत्यां भ्रूणो गर्भो, यद्वा सांगवेदार्थव्याख्याता दीक्षितो भ्रूणो, वीरहत्यां वीरः पुत्रः सवनस्थः क्षत्रियो वाऽन्यच्च पातकं सर्वं तरति । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति ॥ इति द्वितीयोऽध्यायः ॥२॥

य एतं मंत्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निं स्तंभयति स वायुं स्तंभयति स आदित्यं स्तंभयति स सोमं स्तंभयति स उदकं स्तंभयति स सर्वान्देवान्स्तंभयति स सर्वान्ग्रहान्स्तंभयति स विषं स्तंभयति स विषं स्तंभयति ॥ इति तृतीयोऽध्यायः ॥३॥

य एतं मंत्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निं वायुमादित्यं सोममुदकं सर्वान्देवान्ग्रहान्विषं स्तंभयतीति स्तंभनफलनिर्देशः । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति ॥ इति तृतीयोऽध्यायः ॥३॥

य एतं मंत्रराजं नारसिंहमानुष्टुभं नित्यमधीते स भूर्लोकं जयति स भुवर्लोकं जयति स स्वर्लोकं जयति स महर्लोकं जयति स जनोलोकं जयति स तपोलोकं जयति स सत्यलोकं जयति स सर्वलोकं जयति स सर्वलोकं जयति ॥ इति चतुर्थोऽध्यायः ॥४॥

य एतं मंत्रराजं नारसिंहमानुष्टुभं नित्यमधीते स भूर्भुवःस्वर्महर्जनस्तपः सत्यमन्यच्च सर्वं पाताललोकं जयतीति फलनिर्देशः । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति ॥ इति चतुर्थोऽध्यायः ॥४॥

य एतं मंत्रराजं नारसिंहमानुष्टुभं नित्यमधीते स मनुष्यानाकर्षयति स देवानाकर्षयति स नागानाकर्षयति स यक्षानाकर्षयति

स ग्रहानाकर्षयति स सर्वानाकर्षयति स सर्वानाकर्षयति ॥ इति पंचमोऽध्यायः ॥५॥

य एतं मंत्रराजं नारसिंहमानुष्टुभं नित्यमधीते स मनुष्यान्देवान्नागान्यक्षान्ग्रहांस्तद्व्यतिरिक्तानन्यांश्च आकर्षयतीति फलनिर्देशः । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति ॥ • इति पंचमोऽध्यायः ॥५॥

य एतं मंत्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निष्टोमेन यजते स उक्थ्येन यजते स षोडशिना यजते स वाजपेयेन यजते सोऽतिरात्रेणं यजते सोऽप्तोर्यामेण यजते सोऽश्वमेधेन यजते स सर्वैः क्रतुभिर्यजते स सर्वैः क्रतुभिर्यजते ॥ इति षष्ठोऽध्यायः ॥६॥

य एतं मंत्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निष्टोमेनोक्थ्येन षोडशिना वाजपेयेनातिरात्रेणाप्तोर्यामेणान्यैश्च सर्वैः क्रतुभिर्यजत इति फलनिर्देशः । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति । न च वाच्यं अन्यानर्थक्यादिति न्यायेन कथं फलनिर्देश इति । यतो मनोव्यापारैकसाध्यत्वादेतद्विद्यानुष्ठानस्य तस्य च कर्मानुष्ठानादत्यंतदुःसंपादत्वादित्यधिकारभेदेन नान्यानर्थक्यमिति सर्वं निर्मलम् ॥ इति षष्ठोऽध्यायः ॥६॥

य एतं मंत्रराजं नारसिंहमानुष्टुभं नित्यमधीते स ऋचोऽधीते स यजूंष्यधीते स सामान्यधीते सोऽथर्वाणमधीते सोंऽगिरसमधीते स शाखा अधीते स पुराणान्यधीते स कल्पानधीते स गाथा अधीते स नाराशंसीरधीते स प्रणवमधीते यः प्रणवमधीते स सर्वमधीते स सर्वमधीते ॥ इति सप्तमोऽध्यायः ॥७॥

य एतं मंत्रराजं नारसिंहमानुष्टुभं नित्यमधीते स ऋचो यजूंषि सामान्यथर्वाणमांगिरसमेतच्च त्रयीसंपुटीकरणमेतदंतरालवर्तित्वादेतस्य । तथाच तस्मिन्नेव ब्राह्मणे प्रजापतिः प्रथममथर्वाणमपश्यत्ततस्त्रयीं ततोंऽगिरसमित्यसकृदभिहितत्वाच्छाखाः पुराणानि कल्पान्गाथा नाराशंसीः प्रणवमधीत इति फलनिर्देशः । अत्र च यः प्रणवमधीते स सर्वमधीत इति वदन्मूलमंत्रप्रणवयोः फलसाम्यादुभयोः साम्यं दर्शयति । ततश्च जपे समाधौ चोभयोर्विकल्पः । तथाच नित्यानुष्ठाने फलकामनायां प्रयोगविशेषः । तत्तत्फलपदोच्चारणं मूलमंत्रजपान्ते कार्यमिति केचित् । अन्ये तु तद्विनैव केवलं

कामनैव कार्येति, सांप्रदायिकमेवान्वेष्यमिति । द्विरभ्यासोऽध्यायसमाप्तिं द्योतयति ॥ इति सप्तमोऽध्यायः ॥७॥

अनुपनीतशतमेकमेकेनोपनीतेन तत्सममुपनीतशतमेकमेकेन गृहस्थेन तत्समं गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समं वानप्रस्थशतमेकमेकेन यतिना तत्समं यतीनां च शतं पूर्णं रुद्रजापकेन तत्समं रुद्रजापिशतमेकमेकेनाथर्वशिरःशिखाध्यायकेन तत्सममथर्वशिरःशिखाध्यायकशतमेकमेकेन मंत्रराजजापकेन तत्समं तद्वा एतत्परमं धाम मंत्रराजाध्यायकस्य यत्र सूर्यो न तपति यत्र न वायुर्वाति यत्र न चंद्रमास्तपति यत्र न नक्षत्राणि भान्ति यत्र नाग्निर्दहति यत्र न मृत्युः प्रविशति यत्र न दुःखं सदानंदं परमानंदं शान्तं शाश्वतं सदाशिवं ब्रह्मादिवंदितं योगिध्येयं यत्र गत्वा न निवर्तंते योगिनस्तदेतदृचाऽभ्युक्तम्—तद्विष्णोः परमं पदं सदा पश्यंति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिंधते । विष्णोर्यत्परमं पदमिति तदेतन्निष्कामस्य भवति तदेतन्निष्कामस्य भवति ॥ इत्यष्टमोऽध्यायः ॥८॥

इत्यथर्ववेदांतर्गतनृसिंहपूर्वतापनीयोपनिषदि पंचम्युपनिषत्समाप्ता ॥५॥

एवं नित्यानुष्ठान आनुषंगिकं सर्वं फलमभिधायाथेदानीं तद्विद्यानुष्ठातुर्जप्तुरध्येतुश्चोत्कर्षतरतमभावेन सर्वोत्कृष्टतां सर्वोत्कृष्टं च फलमाह—अनुपनीतशतमेकमेकेनोपनीतेन तत्समम् । उपनीतशतमुपकुर्वाणकानां न नैष्ठिकाभिप्रायेण तस्या सर्वोत्कृष्टत्वात् । एकमेकेन गृहस्थेन च तत्समं गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समं वानप्रस्थशतमेकमेकमेकेन यतिना तत्समं सोऽयमाश्रमस्वीकारमात्रे तरतमभावो नाश्रमप्रयुक्तानुष्ठानाभिप्रायेण । ततश्च यतीनां च शतं पूर्णं स्वीकृताश्रममात्राणां यस्मिन्कस्मिंश्चिस्त्स्थितरुद्रजाप्येन तत्समं रुद्रजप्यशतमेकं यस्मिन्कस्मिंश्चिदाश्रमं स्थिताथर्वशिरःशिखाध्यायकेन जापकेन तत्सममथर्वशिरः शिखाध्यायकशतं मंत्रराजजापकेन तत्सममित्युत्कर्षतरतमभावस्य मंत्रराजजापक एतद्विद्यावति विश्रांतत्वादेतविद्यावान्सर्वोत्कृष्ट इति गम्यते ।

यथाऽनंदतरतमभावस्य ब्रह्मणि विश्रांतत्वाद्ब्रह्मानंद एव सर्वोत्कृष्टः । यस्मादेवं तस्माद्वै प्रसिद्धमेतत्परमं धाम स्थानमेतद्विद्यागर्भितमंत्रराजाध्यायकस्य जापकस्यानुष्ठातुर्वा यत्र क्षीरोदार्णवस्थाने सूर्यो न तपति यत्र वायुर्न वाति यत्र न चंद्रमास्तपति यत्र न नक्षत्राणि भांति यत्र नाग्निर्दहति यत्र न मृत्युः प्रविशति यत्र न दुःखं सदानंदं शाश्वतं शांतं सदाशिवं ब्रह्मादिवंदितं योगिध्येयं यत्र गत्वा न निवर्तंते योगिनस्तदेतत्स्थानमृचाऽभ्युक्तं विष्णोर्यत्परमं पदमिति । यच्छब्देन क्षीरोदार्णवस्थानं परामृश्यते परमपदप्रत्यभिज्ञानात्सूरय उपासका उपासनाभेदेन तादात्म्यमुपासनया चेत्सायुज्यं फलं ततश्च विष्णुरेव परमं पदम् । उभयत्रापि विष्णोरिति षष्ठीनिर्देशः शिलापुत्रकस्य शरीरमितिवत् द्रष्टव्यः । अथोपास्योपासकभावेन चेदनुष्टुब्विद्या तस्य नृसिंहस्य विष्णोः परमं पदं परमं स्थानं महाचक्रनाभिक्षीरोदार्णवप्रभृति तत्र स्थिता उपासका अनुष्ठातारो जप्तारोऽध्येतारो वा सदा सर्वकालं पश्यंति । कीदृशं तदित्यपेक्षित आह—दिवीव द्युलोक इव चक्षुः ख्यातेः सूर्यमंडलमाततमासमंतात्ततं विस्तृतं वर्तुलं प्रकाशात्मकं सर्वप्रकाशाभिभवकारणमतः सूर्यचंद्रनक्षत्रादीनां ब्रह्मणि प्रवेशः प्रतिषिद्धस्तपकर्तृता च यत्र सूर्यो न तपतीत्यादिना । एवं तस्मिन्नाधिदैवात्मके दुःखे प्रतिषिद्ध आध्यात्मिकदुःखप्राप्तौ तत्प्रतिषेधति यत्र न दुःखमिति । विदुःखता दुःखभावमात्रे प्राप्ते सुषुप्तवज्जडता स्यादिति तद्व्यावृत्त्यर्थं सदानंदमिति । ब्रह्मादिवंदितमिति । तदादिन्यायेन नाभिस्थब्रह्मविष्णुमहेश्वरैः परिचारकैर्वंदनीयं महाचक्राख्यं स्थानम् । यत्र गत्वेति गंतव्यतामाह—तद्विप्रास इति । तत्तादृशं स्थानं विप्रासो विप्रा ब्राह्मणा उपासका विपन्यवो मेधाविनः समाधौ धारणशक्तियुक्ताः । जागृवांसो जागरितावस्थायामेवावस्थात्रयात्प्रच्युत्य समिन्धते समृद्धिं कुर्वंति । तादात्म्यपक्षे तु मंत्रब्राह्मणयोर्यथास्वरूपं व्याख्येयम् । इतिशब्दो मंत्रसमाप्तिं द्योतयति । पदचतुष्टयाभ्यासः सर्वोपनिषत्समाप्तिं द्योतयतीति सर्वं निर्मलं सिद्धम् ॥

इत्यष्टमोऽध्यायः ॥ ८ ॥ ३ ॥

इति श्रीगोविंदभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यश्रीशं-
करभगवत आद्यकृतावाथर्वणनृसिंहपूर्वतापनीयोपनिषद्भाष्ये पंच-
मोपनिषद्भाष्यं संपूर्णम् ॥ ५ ॥

समाप्तेयं सभाष्यनृसिंहपूर्वतापनीयोपनिषत् ॥

---

श्रीमच्छंकराचार्यविरचितः

# विवेकचूडामणिः ।



सर्ववेदांतसिद्धांतगोचरं तमगोचरम् ।
गोविंदं परमानंदं सद्गुरुं प्रणतोऽस्म्यहम् ॥१॥
जंतूनां नरजन्म दुर्लभमतः पुंस्त्वं ततो विप्रता
तस्माद्वैदिकधर्ममार्गपरता विद्वत्त्वमस्मात्परम् ।
आत्मानात्मविवेचनं स्वनुभवो ब्रह्मात्मना संस्थिति-
र्मुक्तिर्नो शतजन्मकोटिसुकृतैः पुण्यैर्विना लभ्यते ॥२॥
दुर्लभं त्रयमेवैतद्देवानुग्रहहेतुकम् ।
मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः ॥३॥
लब्ध्वा कथंचिन्नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनम् ।
यस्त्वात्ममुक्तो न यतेत मूढधीः
स ह्यात्महा स्वं विनिहन्त्यसद्ग्रहात् ॥४॥
इतः कोऽन्वस्ति मूढात्मा यस्तु स्वार्थे प्रमाद्यति ।
दुर्लभं मानुषं देहं प्राप्य तत्रापि पौरुषम् ॥५॥
वदन्तु शास्त्राणि यजन्तु देवान्कुर्वन्तु कर्माणि भजन्तु देवताः ।
आत्मैक्यबोधेन विनापि मुक्तिर्न सिद्ध्यति ब्रह्मशतान्तरेऽपि ॥६॥
अमृतत्वस्य नाशास्ति वित्तेनेत्येव हि श्रुतिः ।
ब्रवीति कर्मणो मुक्तेरहेतुत्वं स्फुटं यतः ॥७॥
अतो विमुक्त्यै प्रयतेत विद्वान्संन्यस्तबाह्यार्थसुखस्पृहः सन् ।
संतं महांतं समुपेत्य देशिकं तेनोपदिष्टार्थसमाहितात्मा ॥८॥
उद्धरेदात्मनात्मानं मग्नं संसारवारिधौ ।
योगारूढत्वमासाद्य सम्यग्दर्शननिष्ठया ॥९॥
संन्यस्य सर्वकर्माणि भवबंधविमुक्तये ।
यत्यतां पंडितैर्धीरैरात्माभ्यास उपस्थितैः ॥१०॥
चित्तस्य शुद्धये कर्म न तु वस्तूपलब्धये ।

वस्तुसिद्धिर्विचारेण न किंचित्कर्मकोटिभिः ॥११॥
सम्यग्विचारतः सिद्धा रज्जूतत्त्वावधारणा ।
भ्रांतोदितमहासर्प-भयदुःखविनाशिनी ॥१२॥
अर्थस्य निश्चयो दृष्टो विचारेण हितोक्तितः ।
न स्नानेन न दानेन प्राणायामशतेन वा ॥१३॥
अधिकारिणमाशास्ते फलसिद्धिर्विशेषतः ।
उपाया देशकालाद्याः संत्यस्मिन्सहकारिणः ॥१४॥
अतो विचारः कर्तव्यो जिज्ञासोरात्मवस्तुनः ।
समासाद्य दयासिंधुं गुरुं ब्रह्मविदुत्तमम् ॥१५॥
मेधावी पुरुषो विद्वानूहापोहविचक्षणः ।
अधिकार्यात्मविद्यायामुक्तलक्षणलक्षितः ॥१६॥
विवेकिनो विरक्तस्य शमादिगुणशालिनः ।
मुमुक्षोरेव हि ब्रह्मजिज्ञासायोग्यता मता ॥१७॥
साधनान्यत्र चत्वारि कथितानि मनीषिभिः ।
येषु सत्स्वेव सन्निष्ठा यदभावे न सिद्ध्यति ॥१८॥
आदौ नित्यानित्यवस्तुविवेकः परिगण्यते ।
इहामुत्र फलभोगविरागस्तदनंतरम् ॥१९॥
शमादिषट्कसंपत्तिर्मुमुक्षुत्वमिति स्फुटम् ।
ब्रह्म सत्यं जगन्मिथ्येत्येवंरूपो विनिश्चयः ॥२०॥
सोऽयं नित्यानित्यवस्तुविवेकः समुदाहृतः ।
तद्वैराग्यं जिहासा या दर्शनश्रवणादिभिः ॥२१॥
देहादिब्रह्मपर्यंते ह्यनित्ये भोगवस्तुनि ।
विरज्य विषयव्राताद्दोषदृष्ट्या मुहुर्मुहुः ॥२२॥
स्वलक्ष्ये नियतावस्था मनसः शम उच्यते ।
विषयेभ्यः परावर्त्य स्थापनं स्वस्वगोलके ॥२३॥
उभयेषामिंद्रियाणां स दमः परिकीर्तितः ।
बाह्यानालंबनं वृत्तेरेषोपरतिरुत्तमा ॥२४॥
सहनं सर्वदुःखानामप्रतीकारपूर्वकम् ।



चिंताविलापरहितं सा तितिक्षा निगद्यते ॥२५॥
शास्त्रस्य गुरुवाक्यस्य सत्यबुद्ध्यवधारणम् ।
सा श्रद्धा कथिता सद्भिर्यया वस्तूपलभ्यते ॥२६॥
सर्वदा स्थापनं बुद्धेः शुद्धे ब्रह्मणि सर्वदा ।
तत्समाधानमित्युक्तं न तु चित्तस्य लालनम् ॥२७॥
अहंकारादिदेहांतान्बंधानज्ञानकल्पितान् ।
स्वस्वरूपावबोधेन मोक्तुमिच्छा मुमुक्षुता ॥२८॥
मंदमध्यमरूपापि वैराग्येण शमादिना ।
प्रसादेन गुरोः सेयं प्रवृद्धा सूयते फलम् ॥२९॥
वैराग्यं च मुमुक्षुत्वं तीव्रं यस्य तु विद्यते ।
तस्मिन्नेवार्थवन्तः स्युः फलवंतः शमादयः ॥३०॥
एतयोर्मंदता यत्र विरक्तत्वमुमुक्षयोः ।
मरौ सलिलवत्तत्र शमादेर्भासमात्रता ॥३१॥
मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी ।
स्वस्वरूपानुसंधानं भक्तिरित्यभिधीयते ॥३२॥
स्वात्मतत्त्वानुसंधानं भक्तिरित्यपरे जगुः ।
उक्तसाधनसंपन्नस्तत्त्वजिज्ञासुरात्मनः ॥३३॥
उपसीदेद्गुरुं प्राज्ञं यस्माद्बंधविमोक्षणम् ।
श्रोत्रियोऽवृजिनोऽकामहतो यो ब्रह्मवित्तमः ॥३४॥
ब्रह्मण्युपरतः शांतो निरिंधन इवानलः ।
अहेतुकदयासिंधुर्बन्धुरानमतां सताम् ॥३५॥
तमाराध्य गुरुं भक्त्या प्रह्वप्रश्रयसेवनैः ।
प्रसन्नं तमनुप्राप्य पृच्छेज्ज्ञातव्यमात्मनः ॥३६॥
स्वामिन्नमस्ते नतलोकबंधो कारुण्यसिंधो पतितं भवाब्धौ ।
मामुद्धरात्मीयकटाक्षदृष्ट्या ऋज्व्यातिकारुण्यसुधाभिवृष्ट्या ॥३७॥
दुर्वारसंसारदवाग्नितप्तं दोधूयमानं दुरदृष्टवातैः ।
भीतं प्रपन्नं परिपाहि मृत्योः शरण्यमन्यद्यदहं न जाने ॥३८॥
शांता महांतो निवसंति संतो वसंतवल्लोकहितं चरंतः ।

तीर्णाः स्वयं भीमभवार्णवं जना न हेतुनान्यानपि तारयन्तः ॥३९॥
अयं स्वभावः स्वत एव यत्परश्रमापनोदप्रवणं महात्मनाम् ।
सुधांशुरेष स्वयमर्ककर्कशप्रभाभितप्तामवति क्षितिं किल ॥४०॥
ब्रह्मानंदरसानुभूतिकलितैः पूतैः सुशीतैर्युतै-
र्युष्मद्वाक्कलशोज्झितैः श्रुतिसुखैर्वाक्यामृतैः सेचय ।
संततं भवतापदावदहनज्वालाभिरेनं प्रभो
धन्यास्ते भवदीक्षणक्षणगतेः पात्रीकृताः स्वीकृताः ॥४१॥
कथं तरेयं भवसिंधुमेतं का वा गतिर्मे कतमोऽस्त्युपायः ।
जाने न किंचित्कृपयाव मां प्रभो संसारदुःखक्षतिमातनुष्व ॥४२॥
तथा वदंतं शरणागतं स्वं संसारदावानलतापतप्तम् ।
निरीक्ष्य कारुण्यरसार्द्रदृष्ट्या दद्यादभीतिं सहसा महात्मा ॥४३॥
विद्वान्स तस्मा उपसत्तिमीयुषे मुमुक्षवे साधु यथोक्तकारिणे ।
प्रशांतचित्ताय शमान्विताय तत्त्वोपदेशं कृपयैव कुर्यात् ॥४४॥

॥ श्रीगुरुरुवाच ॥

मा भैष्ट विद्वंस्तव नास्त्यपायः संसारसिंधोस्तरणेऽस्त्युपायः ।
येनैव याता यतयोऽस्य पारं तमेव मार्गं तव निर्दिशामि ॥४५॥
अस्त्युपायो महान्कश्चित्संसारभयनाशनः ।
तेन तीर्त्वा भवांभोधिं परमानंदमाप्स्यसि ॥४६॥
वेदांतार्थविचारेण जायते ज्ञानमुत्तमम् ।
तेनात्यंतिकसंसारदुःखनाशो भवत्यनु ॥४७॥
श्रद्धाभक्तिध्यानयोगान्मुमुक्षोर्मुक्तेर्हेतून्वक्ति साक्षाच्छ्रुतेर्गीः ।
यो वा एतेष्वेव तिष्ठत्यमुष्य मोक्षोऽविद्याकल्पिताद्देहबंधात् ॥४८॥
अज्ञानयोगात्परमात्मनस्तव ह्यनात्मबंधस्तत एव संसृतिः ।
तयोर्विवेकोदितबोधवह्निरज्ञानकार्यं प्रदहेत्समूलम् ॥४९॥

॥ शिष्य उवाच ॥

कृपया श्रूयतां स्वामिन् प्रश्नोऽयं क्रियते मया ।
यदुत्तरमहं श्रुत्वा कृतार्थः स्यां भवन्मुखात् ॥५०॥
को नाम बंधः कथमेष आगतः कथं प्रतिष्ठास्य कथं विमोक्षः ।

कोऽसावनात्मा परमः स्व आत्मा तयोर्विवेकः कथमेतदुच्यताम्॥५१॥

॥ श्रीगुरुरुवाच ॥

धन्योऽसि कृतकृत्योऽसि पावितं ते कुलं त्वया ।
यदविद्याबंधमुक्त्या ब्रह्मीभवितुमिच्छसि ॥५२॥
ऋणमोचनकर्तारः पितुः संति सुतादयः ।
बंधमोचनकर्ता तु स्वस्मादन्यो न कश्चन ॥५३॥
मस्तकन्यस्तभारादेर्दुःखमन्यैर्निवार्यंते ।
क्षुधादिकृतदुःखं तु विना स्वेन न केनचित् ॥५४॥
पथ्यमौषधसेवा च क्रियते येन रोगिणा ।
आरोग्यसिद्धिर्दृष्टास्य नान्यानुष्ठितकर्मणा ॥५५॥
वस्तुस्वरूपं स्फुटबोधचक्षुषा स्वेनैव वेद्यं न तु पंडितेन ।
चंद्रस्वरूपं निजचक्षुषैव ज्ञातव्यमन्यैरवगम्यते किम् ॥५६॥
अविद्याकामकर्मादिपाशबंधं विमोचितुम् ।
कः शक्नुयाद्विनात्मानं कल्पकोटिशतैरपि ॥५७॥
न योगेन न सांख्येन कर्मणा नो न विद्यया ।
ब्रह्मात्मैकत्वबोधेन मोक्षः सिद्ध्यति नान्यथा ॥५८॥
वीणाया रूपसौंदर्यं तंत्रीवादनसौष्ठवम् ।
प्रजारञ्जनमात्रं तन्न साम्राज्याय कल्पते ॥५९॥
वाग्वैखरी शब्दझरी शास्त्रव्याख्यानकौशलम् ।
वैदुष्यं विदुषां तद्वद्भुक्तये न तु मुक्तये ॥६०॥
अविज्ञाते परे तत्त्वे शास्त्राधीतिस्तु निष्फला ।
विज्ञातेऽपि परे तत्त्वे शास्त्राधीतिस्तु निष्फला ॥६१॥
शब्दजालं महारण्यं चित्तभ्रमणकारणम् ।
अतः प्रयत्नाज्ज्ञातव्यं तत्त्वज्ञात्तत्त्वमात्मनः ॥६२॥
अज्ञानसर्पदष्टस्य ब्रह्मज्ञानौषधं विना ।
किमु वेदैश्च शास्त्रैश्च किमु मंत्रैः किमौषधैः ॥६३॥
न गच्छति विना पानं व्याधिरौषधशब्दतः ।
विनापरोक्षानुभवं ब्रह्मशब्दैर्न मुच्यते ॥६४॥

अकृत्वा दृश्यविलयमज्ञात्वा तत्त्वमात्मनः ।
बाह्यशब्दैः कुतो मुक्तिरुक्तिमात्रफलैर्नृणाम् ॥६५॥
अकृत्वा शत्रुसंहारमगत्वाखिलभूश्रियम् ।
राजाहमिति शब्दान्नो राजा भवितुमर्हति ॥६६॥
आप्तोक्तिं खननं तथोपरि शिलाद्युत्कर्षणं स्वीकृतिं
निक्षेपः समपेक्षते नहि बहिः शब्दैस्तु निर्गच्छति ॥
तद्वत् ब्रह्मविदोपदेशमननध्यानादिभिर्लभ्यते
मायाकार्यतिरोहितं स्वममलं तत्त्वं न दुर्युक्तिभिः ॥६७॥
तस्मात्सर्वप्रयत्नेन भवबंधविमुक्तये ।
स्वैरेव यत्नः कर्तव्यो रोगादाविव पंडितैः ॥६८॥
यस्त्वयाद्य कृतः प्रश्नो वरीयाञ्छास्त्रविन्मतः ।
सूत्रप्रायो निगूढार्थो ज्ञातव्यश्च मुमुक्षुभिः ॥६९॥
शृणुष्वावहितो विद्वन्यन्मया समुदीर्यते ।
तदेतच्छ्रवणात्सत्यं भवबंधाद्विमोक्ष्यसे ॥७०॥
मोक्षस्य हेतुः प्रथमो निगद्यते वैराग्यमत्यंतमनित्यवस्तुषु ।
ततः शमश्चापि दमस्तितिक्षा न्यासः प्रसक्ताखिलकर्मणां भृशम् ॥७१
ततः श्रुतिस्तन्मननं सतत्त्वध्यानं चिरं नित्यनिरंतरं मुनेः ।
ततोऽविकल्पं परमेत्य विद्वानिहैव निर्वाणसुखं समृच्छति ॥७२॥
यद्बोद्धव्यं तवेदानीमात्मानात्मविवेचनम् ।
तदुच्यते मया सम्यक् श्रुत्वात्मन्यवधारय ॥७३॥
मज्जास्थिमेदः पलरक्तचर्मत्वगाह्वयैर्धातुभिरेभिरन्वितम् ।
पादोरुवक्षोभुजपृष्ठमस्तकैरंगैरुपांगैरुपयुक्तमेतत् ॥७४॥
अहंममेति प्रथितं शरीरं मोहास्पदं स्थूलमितीर्यते बुधैः ।
नभोनभस्वद्दहनाम्बुभूमयः सूक्ष्माणि भूतानि भवंति तानि ॥७५॥
परस्परांशैर्मिलितानि भूत्वा स्थूलानि च स्थूलशरीरहेतवः ।
मंत्रास्तदीया विषया भवन्ति शब्दादयः पंच सुखाय भोक्तुः ॥७६
य एषु मूढा विषयेषु बद्धा रागोरुपाशेन सुदुर्दमेन ।
आयांति निर्यांत्यध ऊर्ध्वमुच्चैः स्वकर्मदूतेन जवेन नीताः ॥७७॥

शब्दादिभिः पंचभिरेव पंच पंचत्वमापुः स्वगुणेन बद्धाः ।
कुरंगमातंगपतंगमीनभृंगा नरः पंचभिरंचितः किम् ॥७८॥
दोषेण तीव्रो विषयः कृष्णसर्पविषादपि ।
विषं निहंति भोक्तारं द्रष्टारं चक्षुषाप्ययम् ॥७९॥
विषयाशामहापाशाद्यो विमुक्तः सुदुस्त्यजात् ।
स एव कल्पते मुक्त्यै नान्यः षट्शास्त्रवेद्यपि ॥८०॥
आपातवैराग्यवतो मुमुक्षून् भवाब्धिपारं प्रतियातुमुद्यतान् ।
आशाग्रहो मज्जयतेऽन्तराले निगृह्य कंठे विनिवर्त्य वेगात् ॥८१॥
विषयाशाग्रहो येन सुविरक्त्यसिना हतः ।
स गच्छति भवाम्भोधेः पारं प्रत्यूहवर्जितः ॥८२॥
विषमविषयमार्गैर्गच्छतोऽनच्छबुद्धेः
प्रतिपदमभियातो मृत्युरप्येष विद्धि ।
हितसुजनगुरूक्त्या गच्छतः स्वस्य युक्त्या
प्रभवति फलसिद्धिः सत्यमित्येव विद्धि ॥८३॥
मोक्षस्य कांक्षा यदि वै तवास्ति त्यजातिदूराद्विषयान्विषं यथा ।
पीयूषवत्तोषदयाक्षमार्जवप्रशांतिदान्तीर्भज नित्यमादरात् ॥८४॥
अनुक्षणं यत्परिहृत्य कृत्यमनाद्यविद्याकृतबंधमोक्षणम् ।
देहः परार्थोऽयममुष्य पोषणे यः सज्जते स स्वमनेन हंति ॥८५॥
शरीरपोषणार्थी सन् य आत्मानं दिदृक्षति ।
ग्राहं दारुधिया धृत्वा नदीं तर्तुं स गच्छति ॥८६॥
मोह एव महामृत्युर्मुमुक्षोर्वपुरादिषु ।
मोहो विनिर्जितो येन स मुक्तिपदमर्हति ॥८७॥
मोहं जहि महामृत्युं देहदारसुतादिषु ।
यं जित्वा मुनयो यांति तद्विष्णोः परमं पदम् ॥८८॥
त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंकुलम् ।
पूर्णं मूत्रपुरीषाभ्यां स्थूलं निंद्यमिदं वपुः ॥८९॥
पंचीकृतेभ्यो भूतेभ्यः स्थूलेभ्यः पूर्वकर्मणा ।
समुत्पन्नमिदं स्थूलं भोगायतनमात्मनः ।

अवस्था जागरस्तस्य स्थूलार्थानुभवो यतः ॥९०॥
बाह्येंद्रियैः स्थूलपदार्थसेवां स्रक्चंदनस्त्र्यादिविचित्ररूपाम् ।
करोति जीवः स्वयमेतदात्मना तस्मात्प्रशस्तिर्वपुषोऽस्य जागरे ॥९१
सर्वोऽपि बाह्यसंसारः पुरुषस्य यदाश्रयः ।
विद्धि देहमिदं स्थूलं गृहवद् गृहमेधिनः ॥९२॥
स्थूलस्य संभवजरामरणानि धर्माः
स्थौल्यादयो बहुविधाः शिशुताद्यवस्थाः ।
वर्णाश्रमादिनियमा बहुधामयाः स्युः
पूजावमानबहुमानमुखा विशेषाः ॥९३॥
बुद्धीन्द्रियाणि श्रवणं त्वगक्षि घ्राणं च जिह्वा विषयावबोधनात् ।
वाक्पाणिपादं गुदमप्युपस्थः कर्मेंद्रियाणि प्रवणेन कर्मसु ॥९४॥
निगद्यतेऽन्तःकरणं मनोधीरहंकृतिश्चित्तमिति स्ववृत्तिभिः ।
मनस्तु संकल्पविकल्पनादिभिर्बुद्धिः पदार्थाध्यवसायधर्मतः ॥
अत्राभिमानादहमित्यहंकृतिः स्वार्थानुसंधानगुणेन चित्तम् ॥९६॥
प्राणापानव्यानोदानसमाना भवत्यसौ प्राणः ।
स्वयमेव वृत्तिभेदाद्विकृतिभेदात्सुवर्णसलिलवत् ॥९७॥
वागादि पंच श्रवणादि पंच प्राणादि पंचाभ्रमुखानि पंच ।
बुद्ध्याद्यविद्यापि च कामकर्मणी पुर्यष्टकं सूक्ष्मशरीरमाहुः ॥९८॥
इदं शरीरं शृणु सूक्ष्मसंज्ञितं लिंगं त्वपंचीकृतभूतसंभवम् ।
सवासनं कर्मफलानुभावकं स्वाज्ञानतोऽनादिरुपाधिरात्मनः ॥९९॥
स्वप्नो भवत्यस्य विभक्त्यवस्था स्वमात्रशेषेण विभाति यत्र ।
स्वप्ने तु बुद्धिः स्वयमेव जाग्रत्कालीननानाविधवासनाभिः ॥१००॥
कर्त्रादिभावं प्रतिपद्य राजते यत्र स्वयं भाति ह्ययं परात्मा ।
धीमात्रकोपाधिरशेषसाक्षी न लिप्यते तत्कृतकर्मलेशैः ।
यस्मादसंगस्तत एव कर्मभिर्न लिप्यते किंचिदुपाधिना कृतैः ॥१०१
सर्वव्यापृतिकरणं लिंगमिदं स्याच्चिदात्मनः पुंसः ।
वास्यादिकमिव तक्षणस्तेनैवात्मा भवत्यसंगोऽयम् ॥१०२॥
अंधत्वमंदत्वपटुत्वधर्माः सौगुण्यवैगुण्यवशाद्धि चक्षुषः ।

बाधिर्यमूकत्वमुखास्तथैव श्रोत्रादिधर्मा न तु वेत्तुरात्मनः ॥१०३॥
उच्छ्वासनिःश्वासविजृम्भणक्षु-
त्प्रस्यन्दनाद्युत्क्रमणादिकाः क्रियाः ॥
प्राणादिकर्माणि वदन्ति तज्ज्ञाः
प्राणस्य धर्मावशनापिपासे ॥१०४॥
अंतःकरणमेतेषु चक्षुरादिषु वर्ष्मणि ।
अहमित्यभिमानेन तिष्ठत्याभासतेजसा ॥१०५॥
अहंकारः स विज्ञेयः कर्ता भोक्ताभिमान्ययम् ।
सत्त्वादिगुणयोगेन चावस्थात्रयमश्नुते ॥१०६॥
विषयाणामानुकूल्ये सुखी दुःखी विपर्यये ।
सुखं दुःखं च तद्धर्मः सदानंदस्य नात्मनः ॥१०७॥
आत्मार्थत्वेन हि प्रेयान्विषयो न स्वतः प्रियः ।
स्वत एव हि सर्वेषामात्मा प्रियतमो यतः ॥१०८॥
तत आत्मा सदानंदो नास्य दुःखं कदाचन ।
यत्सुषुप्तौ निर्विषय आत्मानंदोऽनुभूयते ।
श्रुतिः प्रत्यक्षमैतिह्यमनुमानं च जाग्रति ॥१०९॥
अव्यक्तनाम्नी परमेशशक्तिरनाद्यविद्या त्रिगुणात्मका परा ।
कार्यानुमेया सुधियैव माया यया जगत्सर्वमिदं प्रसूयते ॥११०॥
सन्नाप्यसन्नाप्युभयात्मिका नो भिन्नाप्यभिन्नाप्युभयात्मिका नो ।
सांगाप्यनंगा ह्युभयात्मिका नो महाद्भुतानिर्वचनीयरूपा ॥१११॥
शुद्धाद्वयब्रह्मविबोधनाश्या सर्पभ्रमो रज्जुविवेकतो यथा ।
रजस्तमः सत्त्वमिति प्रसिद्धा गुणास्तदीयाः प्रथितैः स्वकार्यैः ॥११२
विक्षेपशक्ती रजसः क्रियात्मिका यतः प्रवृत्तिः प्रसृता पुराणी ।
रागादयोऽस्याः प्रभवन्ति नित्यं दुःखादयो ये मनसो विकाराः ११३
कामः क्रोधो लोभदम्भाद्यसूयाहंकारेर्ष्यामत्सराद्यास्तु घोराः ।
धर्मा एते राजसाः पुम्प्रवृत्तिर्यस्मादेषा तद्रजो बंधहेतुः ॥११४॥
एषावृत्तिर्नाम तमोगुणस्य शक्तिर्यया वस्त्ववभासतेऽन्यथा ।
सैषा निदानं पुरुषस्य संसृतेर्विक्षेपशक्तेः प्रणवस्य हेतुः ॥११५॥

प्रज्ञावानपि पंडितोऽपि चतुरोऽप्यत्यंतसूक्ष्मात्मदृग्
व्यालीढस्तमसा न वेत्ति बहुधा संबोधितोऽपि स्फुटम् ॥
भ्रान्त्यारोपितमेव साधु कलयत्यालंबते तद्गुणान् ।
हंतासौ प्रबला दुरंततमसः शक्तिर्महत्यावृतिः ॥११६॥
अभावना वा विपरीतभावना संभावना विप्रतिपत्तिरस्याः ।
संसर्गयुक्तं न विमुंचति ध्रुवं विक्षेपशक्तिः क्षपयत्यजस्रम् ॥११७॥
अज्ञानमालस्यजडत्वनिद्राप्रमादमूढत्वमुखास्तमोगुणाः ।
एतैः प्रयुक्तो नहि वेत्ति किंचिन्निद्रालुवत्स्तंभवदेव तिष्ठति ॥११८॥
सत्वं विशुद्धं जलवत्तथापि ताभ्यां मिलित्वा शरणाय कल्पते ।
यत्रात्मबिंबः प्रतिबिंबितः सन्प्रकाशयत्यर्क इवाखिलं जडम् ११९
मिश्रस्य सत्वस्य भवंति धर्मास्त्वमानिताद्या नियमा यमाद्याः ।
श्रद्धा च भक्तिश्च मुमुक्षुता च दैवी च संपत्तिरसन्निवृत्तिः॥१२०॥
विशुद्धसत्त्वस्य गुणाः प्रसादः स्वात्मानुभूतिः परमा प्रशांतिः ।
तृप्तिः प्रहर्षः परमात्मनिष्ठा यया सदानंदरसं समृच्छति ॥१२१॥
अव्यक्तमेतत्त्रिगुणैर्निरुक्तं तत्कारणं नाम शरीरमात्मनः ।
सुषुप्तिरेतस्य विभक्त्यवस्था प्रलीनसर्वेंद्रियबुद्धिवृत्तिः ॥१२२॥
सर्वप्रकारप्रमितिप्रशान्तिर्बीजात्मनावस्थितिरेव बुद्धेः ।
सुषुप्तिरेतस्य किल प्रतीतिः किंचिन्न वेद्मीति जगत्प्रसिद्धेः ॥१२३॥
देहेंद्रियप्राणमनोऽहमादयः सर्वे विकारा विषयाः सुखादयः ।
व्योमादिभूतान्यखिलं च विश्वमव्यक्तपर्यंतमिदं ह्यनात्मा ॥१२४॥
माया मायाकार्यं सर्वं महदादि देहपर्यंतम् ।
असदिदमनात्मकं त्वं विद्धि मरुमरीचिकाकल्पम् ॥१२५॥
अथ ते संप्रवक्ष्यामि स्वरूपं परमात्मनः ।
यद्विज्ञाय नरो बंधान्मुक्तः कैवल्यमश्नुते ॥१२६॥
अस्ति कश्चित्स्वयं नित्यमहंप्रत्ययलंबनः ।
अवस्थात्रयसाक्षी स पंचकोशविलक्षणः ॥१२७॥
यो विजानाति सकलं जाग्रत्स्वप्नसुषुप्तिषु ।
बुद्धितद्वृत्तिसद्भावमभावमहमित्ययम् ॥१२८॥

यः पश्यति स्वयं सर्वं यं न पश्यति कश्चन।
यश्चेतयति बुद्ध्यादि न तद्यं चेतयत्ययम् ॥१२९॥
येन विश्वमिदं व्याप्तं यन्न व्याप्नोति किंचन।
आभारूपमिदं सर्वं यं भांतमनुभात्ययम् ॥१३०॥
यस्य संनिधिमात्रेण देहेंद्रियमनोधियः।
विषयेषु स्वकीयेषु वर्तंते प्रेरिता इव ॥१३१॥
अहंकारादिदेहांता विषयाश्च सुखादयः।
वेद्यंते घटवद्येन नित्यबोधस्वरूपिणा ॥१३२॥
एषोंऽतरात्मा पुरुषः पुराणो निरंतराखंडसुखानुभूतिः।
सदैकरूपः प्रतिबोधमात्रो येनेषिता वागसवश्चरंति ॥१३३॥
अत्रैव सत्त्वात्मनि धीगुहायामव्याकृताकाश उशत्प्रकाशः।
आकाश उच्चै रविवत्प्रकाशते स्वतेजसा विश्वमिदं प्रकाशयन् १३४
ज्ञाता मनोऽहंकृतिविक्रियाणां देहेंद्रियप्राणकृतक्रियाणाम्।
अयोऽग्निवत्ताननुवर्तमानो न चेष्टते नो विकरोति किंचन ॥१३५॥
न जायते नो म्रियते न वर्धते न क्षीयते नो विकरोति नित्यः।
विलीयमानेऽपि वपुष्यमुष्मिन्न लीयते कुंभ इवांबरं स्वयम् ॥१३६
प्रकृतिविकृतिभिन्नः शुद्धबोधस्वभावः
सदसदिदमशेषं भासयन्निर्विशेषः।
विलसति परमात्मा जाग्रदादिष्ववस्था-
स्वहमहमिति साक्षात्साक्षिरूपेण बुद्धेः ॥१३७॥
नियमितमनसामुं त्वं स्वमात्मानमात्म-
न्ययमहमिति साक्षाद्विद्धि बुद्धिप्रसादात्।
जनिमरणतरंगापारसंसारसिंधुं
प्रतर भव कृतार्थो ब्रह्मरूपेण संस्थः ॥१३८॥
अत्रानात्मन्यहमिति मतिर्बंध एषोऽस्य पुंसः
प्राप्तोऽज्ञानाज्जननमरणक्लेशसंपातहेतुः।
येनैवायं वपुरिदमसत्सत्यमित्यात्मबुद्ध्या
पुष्यत्युक्षत्यवति विषयैस्तंतुभिः कोशकृद्वत् ॥१३९॥

अतस्मिंस्तद्बुद्धिः प्रभवति विमूढस्य तमसा
विवेकाभावाद्वै स्फुरति भुजगे रज्जुधिषणा।
ततोऽनर्थव्रातो निपतति समादातुरधिक-
स्ततो योऽसद्ग्राहः स हि भवति बंधः शृणु सखे ॥१४०॥
अखंडनित्याद्वयबोधशक्त्या स्फुरंतमात्मानमनंतवैभवम्।
समावृणोत्यावृतिशक्तिरेषा तमोमयी राहुरिवार्कबिंबम् ॥१४१॥
तिरोभूते स्वात्मन्यमलतरतेजोवति पुमा-
ननात्मानं मोहादहमिति शरीरं कलयति।
ततः कामक्रोधप्रभृतिभिरमुं बंधनगुणैः
परं विक्षेपाख्या रजस उरुशक्तिर्व्यथयति ॥१४२॥
महामोहग्राहग्रसनगलितात्मावगमनो।
धियो नानावस्थां स्वयमभिनयंस्तद्गुणतया॥
अपारे संसारे विषयविषपूरे जलनिधौ।
निमज्योन्मज्यायं भ्रमति कुमतिः कुत्सितगतिः ॥१४३॥
भानुप्रभासंजनिताभ्रपंक्तिर्भानुं तिरोधाय विजृंभते यथा।
आत्मोदिताहंकृतिरात्मतत्त्वं तथा तिरोधाय विजृंभते स्वयम् १४४
कवलितदिननाथे दुर्दिने सांद्रमेघै-
र्व्यथयति हिमझंझावायुरुग्रो यथैतान्।
अविरततमसात्मन्यावृते मूढबुद्धिं
क्षपयति बहुदुःखैस्तीव्रविक्षेपशक्तिः ॥१४५॥
एताभ्यामेव शक्तिभ्यां बंधः पुंसः समागतः।
याभ्यां विमोहितो देहं मत्वात्मानं भवत्ययम् ॥१४६॥
बीजं संसृतिभूमिजस्य तु तमो देहात्मधीरंकुरो
रागः पल्लवमंबुकर्म तु वपुः स्कंधोऽसवः शाखिकाः।
अग्राणींद्रियसंहतिश्च विषयाः पुष्पाणि दुःखं फलं
नानाकर्मसमुद्भवं बहुविधं भोक्तात्र जीवः खगः ॥१४७॥
अज्ञानमूलोऽयमनात्मबंधो नैसर्गिकोऽनादिरनंत ईरितः।
जन्माप्ययव्याधिजरादिदुःखप्रवाहपातं जनयत्यमुष्य ॥१४८॥

नास्त्रैर्न शस्त्रैरनिलेन वह्निना छेत्तुं न शक्यो न च कर्मकोटिभिः।
विवेकविज्ञानमहासिना विना धातुः प्रसादेन सितेन मंजुना ॥१४९
श्रुतिप्रमाणैकमतेः स्वधर्मनिष्ठा तयैवात्मविशुद्धिरस्य।
विशुद्धबुद्धेः परमात्मवेदनं तेनैव संसारसमूलनाशः ॥१५०॥
कोशैरन्नमयाद्यैः पंचभिरात्मा न संवृतो भाति।
निजशक्तिसमुत्पन्नैः शैवलपटलैरिवांबु वापिस्थम् ॥१५१॥
तच्छैवालापनये सम्यक् सलिलं प्रतीयते शुद्धम्।
तृष्णासंतापहरं सद्यः सौख्यप्रदं परं पुंसः ॥१५२॥
पंचानामपि कोशानामपवादे विभात्ययं शुद्धः।
नित्यानंदैकरसः प्रत्यग्रूपः परं स्वयं ज्योतिः ॥१५३॥
आत्मानात्मविवेकः कर्तव्यो बंधमुक्तये विदुषा।
तेनैवानंदी भवति स्वं विज्ञाय सच्चिदानंदम् ॥१५४॥
मुंजादिषीकामिव दृश्यवर्गात्प्रत्यंचमात्मानमसंगमक्रियम्।
विविच्य तत्र प्रविलाप्य सर्वं तदात्मना तिष्ठति यः स मुक्तः १५५
देहोऽयमन्नभवनोऽन्नमयस्तुकोश-
श्चान्नेन जीवति विनश्यति तद्विहीनः।
त्वक्चर्ममांसरुधिरास्थिपुरीषराशि-
र्नायं स्वयं भवितुमर्हति नित्यशुद्धः ॥१५६॥
पूर्वं जनेरपि मृतेरपि नायमस्ति
जातः क्षणं क्षणगुणोऽनियतस्वभावः।
नैको जडश्च घटवत्परिदृश्यमानः
स्वात्मा कथं भवति भावविकारवेत्ता ॥१५७॥
पाणिपादादिमान्देहो नात्मा व्यंगेऽपि जीवनात्।
तत्तच्छक्तेरनाशाच्च न नियम्यो नियामकः ॥१५८॥
देहतद्धर्मतत्कर्मतदवस्थादिसाक्षिणः।
स्वत एव स्वतः सिद्धं तद्वैलक्षण्यमात्मनः ॥१५९॥
कुल्यराशिर्मांसलिप्तो मूलपूर्णोऽतिकश्मलः।
कथं भवेदयं वेत्ता स्वयमेतद्विलक्षणः ॥१६०॥

त्वङ्मांसमेदोऽस्थिपुरीषराशावहंमतिं मूढजनः करोति ।
विलक्षणं वेत्ति विचारशीलो निजस्वरूपं परमार्थभूतम् ॥१६१॥
देहोऽहमित्येव जडस्य बुद्धिर्देहे च जीवे विदुषस्त्वहंधीः ।
विवेकविज्ञानवतो महात्मनो ब्रह्माहमित्येव मतिः सदात्मनि ॥१६२
अत्रात्मबुद्धिं त्यज मूढबुद्धे त्वङ्मांसमेदोऽस्थिपुरीषराशौ ।
सर्वात्मनि ब्रह्मणि निर्विकल्पे कुरुष्व शांतिं परमां भजस्व ॥६३॥
देहेंद्रियादावसति भ्रमोदितां विद्वानहंतां न जहाति यावत् ।
तावन्न तस्यास्ति विमुक्तिवार्ताप्यस्त्वेष वेदांतनयांतदर्शी ॥१६४॥
छायाशरीरे प्रतिबिंबगात्रे यत्स्वप्नदेहे हृदि कल्पितांगे ।
यथात्मबुद्धिस्तव नास्ति काचिज्जीवच्छरीरे च तथैव मास्तु॥१६५॥
देहात्मधीरेव नृणामसद्धियां जन्मादिदुःखप्रभवस्य बीजम् ।
यतस्ततस्त्वं जहि तां प्रयत्नात्त्यक्ते तु चित्ते न पुनर्भवाशा ॥१६६
कर्मेंद्रियैः पंचभिरंचितोऽयं प्राणो भवेत्प्राणमयस्तु कोशः ।
येनात्मवानन्नमयोऽन्नपूर्णः प्रवर्ततेऽसौ सकलक्रियासु ॥१६७॥
नैवात्मापि प्राणमयो वायुविकारो
गंतागंता वायुवदंतर्बहिरेषः ।
यस्मात्किंचित्क्वापि न वेत्तीष्टमनिष्टं
स्वं वान्यं वा किंचन नित्यं परतंत्रः ॥१६८॥
ज्ञानेंद्रियाणि च मनश्च मनोमयः स्या-
त्कोशो ममाहमिति वस्तुविकल्पहेतुः ।
संज्ञादिभेदकलनाकलितो बलीयां-
स्तत्पूर्वकोशमभिपूर्य विजृंभते यः ॥१६९॥
पंचेंद्रियैः पंचभिरेव होतृभिः प्रचीयमानो विषयाज्यधारया ।
जाज्वल्यमानो बहुवासनेंधनैर्मनोमयाग्निर्दहति प्रपंचम् ॥१७०॥
न ह्यस्त्यविद्या मनसोऽतिरिक्ता मनो ह्यविद्या भवबंधहेतुः ।
तस्मिन्विनष्टे सकलं विनष्टं विजृंभितेऽस्मिन्सकलं विजृंभते ॥१७१॥
स्वप्नेऽर्थ शून्ये सृजति स्वशक्त्या भोक्त्रादि विश्वं मन एव सर्वम् ।
तथैव जाग्रत्यपि नो विशेषस्तत्सर्वमेतन्मनसो विजृंभणम् ॥१७२॥

सुषुप्तिकाले मनसि प्रलीने नैवास्ति किंचित्सकलप्रसिद्धेः ।
अतो मनःकल्पित एव पुंसः संसार एतस्य न वस्तुतोऽस्ति ।१७३
वायुना नीयते मेघः पुनस्तेनैव नीयते ।
मनसा कल्प्यते बंधो मोक्षस्तेनैव कल्प्यते ॥१७४॥
देहादिसर्वविषये परिकल्प्य रागं
बध्नाति तेन पुरुषं पशुवद्गुणेन ।
वैरस्यमत्र विषवत्सु विधाय पश्चा-
देनं विमोचयति तन्मन एव बंधात् ॥१७५॥
तस्मान्मनः कारणमस्य जंतो-
र्बंधस्य मोक्षस्य च वा विधाने ।
बंधस्य हेतुर्मलिनं रजोगुणै-
र्मोक्षस्य शुद्धं विरजस्तमस्कम् ॥१७६॥
विवेकवैराग्यगुणातिरेकाच्छुद्धत्वमासाद्य मनो विमुक्त्यै ।
भवत्यतो बुद्धिमतो मुमुक्षोस्ताभ्यां दृढाभ्यां भवितव्यमग्रे ॥१७७॥
मनो नाम महाव्याघ्रो विषयारण्यभूमिषु ।
चरत्यत्र न गच्छंतु साधवो ये मुमुक्षवः ॥१७८॥
मनः प्रसूते विषयानशेषान्स्थूलात्मना सूक्ष्मतया च भोक्तुः ।
शरीरवर्णाश्रमजातिभेदान्गुणक्रियाहेतुफलानि नित्यम् ॥१७९॥
असंगचिद्रूपममुं विमोह्य देहेंद्रियप्राणगुणैर्निबध्य ।
अहंममेति भ्रमयत्यजस्रं मनः स्वकृत्येषु फलोपभुक्तिषु ॥१८०॥
अध्यासदोषात्पुरुषस्य संसृति—रध्यासबंधस्त्वमुनैव कल्पितः ।
रजस्तमोदोषवतो विवेकिनो जन्मादिदुःखस्य निदानमेतत् ॥१८१॥
अतः प्राहुर्मनोऽविद्यां पंडितास्तत्त्वदर्शिनः ।
येनैव भ्राम्यते विश्वं वायुनेवाभ्रमंडलम् ॥१८२॥
तन्मनःशोधनं कार्यं प्रयत्नेन मुमुक्षुणा ।
विशुद्धे सति चैतस्मिन्मुक्तिः करफलायते ॥१८३॥
मोक्षैकसक्त्या विषयेषु रागं निर्मूल्य संन्यस्य च सर्वकर्म ।
सच्छ्रद्धया यः श्रवणादिनिष्ठो रजःस्वभावं स धुनोति बुद्धेः॥१८४॥

मनोमयो नापि भवेत्परात्मा ह्याद्यंतवत्त्वात्परिणामिभावात् ।
दुःखात्मकत्वाद्विषयत्वहेतोर्द्रष्टा हि दृश्यात्मतया न दृष्टः ॥१८५॥
बुद्धिर्बुद्धींद्रियैः सार्धं सवृत्तिः कर्तृलक्षणः ।
विज्ञानमयकोशः स्यात्पुंसः संसारकारणम् ॥१८६॥
अनुव्रजच्चित्प्रतिबिंबशक्ति—र्विज्ञानसंज्ञः प्रकृतेर्विकारः ।
ज्ञानक्रियावानहमित्यजस्रं देहेंद्रियादिष्वभिमन्यते भृशम् ॥१८७॥
अनादिकालोऽयमहंस्वभावो जीवः समस्तव्यवहारवोढा ।
करोति कर्माण्यपि पूर्ववासनः पुण्यान्यपुण्यानि च तत्फलानि १८८
भुंक्ते विचित्रास्वपि योनिषु व्रजन्नायाति निर्यात्यध ऊर्ध्वमेषः ।
अस्यैव विज्ञानमयस्य जाग्रत्स्वप्नाद्यवस्था सुखदुःखभोगः ॥१८९॥
देहादिनिष्ठाश्रमधर्मकर्म—गुणाभिमानं सततं ममेति ।
विज्ञानकोशोऽयमतिप्रकाशः प्रकृष्टसांनिध्यवशात्परात्मनः ।
अतो भवत्येव उपाधिरस्य यदात्मधीः संसरति भ्रमेण ॥१९०॥
योऽयं विज्ञानमयः प्राणेषु हृदि स्फुरत्ययं ज्योतिः ।
कूटस्थः सन्नात्मा कर्ता भोक्ता भवत्युपाधिस्थः ॥१९१॥
स्वयं परिच्छेदमुपेत्य बुद्धेस्तादात्म्यदोषेण परं मृषात्मनः ।
सर्वात्मकः सन्नपि वीक्षते स्वयं स्वतः पृथक्त्वेन मृदो घटानिव ॥
उपाधिसंबंधवशात्परात्मा ह्युपाधिधर्माननुभाति तद्गुणः ।
अयोविकारानविकारिवह्निवत्सदैकरूपोऽपि परः स्वभावात् ॥१९३॥

॥ शिष्य उवाच ॥

भ्रमेणाप्यन्यथा वास्तु जीवभावः परात्मनः ।
तदुपाधेरनादित्वान्नानादेर्नाश इष्यते ॥१९४॥
अतोऽस्य जीवभावोऽपि नित्या भवति संसृतिः ।
न निवर्तेत तन्मोक्षः कथं मे श्रीगुरो वद ॥१९५॥

॥ श्रीगुरुरुवाच ॥

सम्यक्पृष्टं त्वया विद्वन्सावधानेन तच्छृणु ।
प्रामाणिकी न भवति भ्रांत्या मोहितकल्पना ॥१९६॥
भ्रांतिं विना त्वसंगस्य निष्क्रियस्य निराकृतेः ।

न घटेतार्थसंबंधो नभसो नीलतादिवत् ॥१९७॥
स्वस्य द्रष्टुर्निर्गुणस्याक्रियस्य
प्रत्यग्बोधानंदरूपस्य बुद्धेः ।
भ्रांत्या प्राप्तो जीवभावो न सत्यो
मोहापाये नास्त्यवस्तु स्वभावात् ॥१९८॥
यावद् भ्रांतिस्तावदेवास्य सत्ता
मिथ्याज्ञानोज्जृंभितस्य प्रमादात् ।
रज्ज्वां सर्पो भ्रांतिकालीन एव
भ्रांतेर्नाशे नैव सर्पोऽपि तद्वत् ॥१९९॥
अनादित्वमविद्यायाः कार्यस्यापि तथेष्यते ।
उत्पन्नायां तु विद्यायामाविद्यकमनाद्यपि ॥२००॥
प्रबोधे स्वप्नवत्सर्वं सहमूलं विनश्यति ।
अनाद्यपीदं नो नित्यं प्रागभाव इव स्फुटम् ॥२०१॥
अनादेरपि विध्वंसः प्रागभावस्य वीक्षितः ।
यद्बुद्ध्युपाधिसंबंधात्परिकल्पितमात्मनि ॥२०२॥
जीवत्वं न ततोऽन्यत्तु स्वरूपेण विलक्षणः ।
संबंधः स्वात्मनो बुद्ध्यां मिथ्याज्ञानपुरःसरः ॥२०३॥
विनिवृत्तिर्भवेत्तस्य सम्यग्ज्ञानेन नान्यथा ।
ब्रह्मात्मैकत्वविज्ञानं सम्यग्ज्ञानं श्रुतेर्मतम् ॥२०४॥
तदात्मानात्मनोः सम्यग्विवेकेनैव सिद्ध्यति ।
ततो विवेकः कर्तव्यः प्रत्यगात्मासदात्मनोः ॥२०५॥
जलं पंकवदत्यंतं पंकापाये जलं स्फुटम् ।
यथा भाति तथात्मापि दोषाभावे स्फुटप्रभः ॥२०६॥
असन्निवृत्तौ तु सदात्मना स्फुटं प्रतीतिरेतस्य भवेत्प्रतीचः ।
ततो निरासः करणीय एव सदात्मनः साध्वहमादिवस्तुनः ॥२०७॥
अतो नायं परात्मा स्याद्विज्ञानमयशब्दभाक् ।
विकारित्वाज्जडत्वाच्च परिच्छिन्नत्वहेतुतः ।
दृश्यत्वाद्व्यभिचारित्वान्नानित्यो नित्य इष्यते ॥२०८॥

आनंदप्रतिबिंबचुंबिततनुर्वृत्तिस्तमोज्जृंभिता
स्यादानंदमयः प्रियादिगुणकः स्वेष्टार्थलाभोदये ।
पुण्यस्यानुभवे विभाति कृतिनामानंदरूपः स्वयं
भूत्वा नंदति यत्र साधु तनुभृन्मात्रः प्रयत्नं विना ॥२०९॥
आनंदमयकोशस्य सुषुप्तौ स्फूर्तिरुत्कटा ।
स्वप्नजागरयोरीषदिष्टसंदर्शनादिना ॥२१०॥
नैवायमानंदमयः परात्मा सोपाधिकत्वात्प्रकृतेर्विकारात् ।
कार्यत्वहेतोः सुकृतक्रियाया विकारसंघातसमाहितत्वात् ॥२११॥
पंचानामपि कोशानां निषेधे युक्तितः श्रुतेः ।
तन्निषेधावधिः साक्षी बोधरूपोऽवशिष्यते ॥२१२॥
योऽयमात्मा स्वयंज्योतिः पंचकोशविलक्षणः ।
अवस्थात्रयसाक्षी सन्निर्विकारो निरंजनः ।
सदानंदः स विज्ञेयः स्वात्मत्वेन विपश्चिता ॥२१३॥

॥ शिष्य उवाच ॥

मिथ्यात्वेन निषिद्धेषु कोशेष्वेतेषु पंचसु ।
सर्वाभावं विना किंचिन्न पश्याम्यत्र हे गुरो ।
विज्ञेयं किमु वस्त्वस्ति स्वात्मनात्र विपश्चिता ॥२१४॥

॥ श्रीगुरुरुवाच ॥

सत्यमुक्तं त्वया विद्वन्निपुणोऽसि विचारणे ।
अहमादिविकारास्ते तदभावोऽयमप्यनु ॥२१५॥
सर्वे येनानुभूयंते यः स्वयं नानुभूयते ।
तमात्मानं वेदितारं विद्धि बुद्ध्या सुसूक्ष्मया ॥२१६॥
तत्साक्षिकं भवेत्तत्तद्यद्येनानुभूयते ।
कस्याप्यननुभूतार्थे साक्षित्वं नोपयुज्यते ॥२१७॥
असौ स्वसाक्षिको भावो यतः स्वेनानुभूयते ।
अतः परं स्वयं साक्षात्प्रत्यगात्मा न चेतरः ॥२१८॥
जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरं योऽसौ समुज्जृंभते
प्रत्यग्रूपतया सदाहमहमित्यंतः स्फुरन्नेकधा ।

